BIBLIOTHECA INDICA:

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NO. 1318.

## भाषावृत्तिः

पुरुषोत्तमदेवकृता श्रीसृष्टिधराचार्य्यकृतभाषावृत्त्यर्थविवृतिसहिता।

## THE BHĀṢĀVRITTIH

OF

PURUSOTTAMA-DEVA

WITH THE

COMMENTAY OF SRI-SRISTIDHARACĀRYA.




EDITED BY

PANDIT GIRICACANDRA VEDĀNTATIRTHA

*Professor, Rani Hemantokumari Sanskrit College, Rajshahi.*

VOL. I. FASC. I.

CALCUTTA:

PRINTED BY S. V. CHATTERJI, SATYA PRESS, 16/1, GHOSE LANE.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET,
1912.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS,—

MR. BERNARD QUARITCH, *11, Grafton Street, New Bond Street, London, W.*,

AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

***Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-5 ; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... ... | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S. V. Sāmasramī ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Ātmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Acvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-8 @ 1/ each ... ... ... ... | 16 | 0 |
| Bālam Bhaṭṭī, Vol I Fasc 1-2 , Vol II Fasc I @ /10/ ... ... | 1 | 14 |
| Baudhāyana Srauta Sutra, Fasc. 1-3 , Vol II Fasc I-3 @ /10/ each ... | 3 | 12 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 Vol II, Fasc. I, @ /10/- ... ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... ... | 2 | 0 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicāryāvatāra of Cāntidevi, Fasc. 1-5 ... ... ... | 3 | 2 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 44 |
| Çatadusani, Fasc. 1 2 ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /1 /, Vol IX. Fasc. I. ... | 3 | 12 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmaṇi, (Text) Vols. II, 1-25 ; III. Part I, Fasc. 1-18, Part II, Fasc. 1 10 ; Vol. IV, Fasc. 1-6 @ /10/ each ... ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 8-9 @ /10/ ... ... ... | 1 | 4 |
| Çlokavārtika, (English) Fasc. 1-7 @ 1/4/ ... ... ... | 8 | 12 |
| Crauta Sutra of Çānkhāyan, (Text) Vol. I, Fasc. 1-7 ; Vol. II, Fasc. 1-4 ; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @/10/ each ... | 10 | 0 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dān Kriyā Kaumundi, Fasc. 1-2 ... ... ... ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7... ... ... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-4 ... ... | 3 | 2 |
| Gobhiliya G hyo Sutrum, Vol. I, @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1-2 @ 1/4/ each ... ... | 2 | 8 |
| Ditto (Apendix) Gobhila Parisista ... ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... .. | | 10 |
| Haralāta ... ... ... ... ... ... | | |
| Karmapradiqh, Fasc. I ... ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... ... | 17 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-10 @ /10/ each ... ... ... ... | 19 | 6 |
| Ditto Vol. IV, Fasc. I @ 1/4 ... ... ... | 1 | 4 |
| Manuṭīkā Sangraha, (Text) Fasc 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| *Mīmāṁsā Darcaṇa, (Text) Fasc. 10-19 @ /10/ each ... ... | 6 | 4 |

# ॥ भाषावृत्तिः ॥

## प्रथमोऽध्यायः ।

### प्रथमः पादः ।

नमो बुद्धाय भाषायां यथाचिमुनिलक्षणम् ।
पुरुषोत्तमदेवेन लघ्वी वृत्ति र्विधीयते ॥

मुरमथनं पुरमथनं मारमणं सुमारमणम् ।
फणधरतल्पं फणाधरतल्पं * वन्दे वाणारि मसमवाणारिम् ॥
नत्वा गुरून् विचार्य्य प्राचीनसंग्रहक्तताञ्च मतानि ।
श्रीसृष्टिधराचार्य्यो लघुवृत्ते र्गौरवं कुरुते ॥
न्यासग्रन्थार्थ-तात्पर्य्य-पर्य्यालोचनशालिभिः ।
शोध्योऽयं करुणावद्भिः कृतिभि र्मे परिश्रमः ॥

स्वाभीष्टदेवतानतिरूपं मङ्गलं शिष्यशिक्षार्थं सुपनिबध्नन्, प्रयोजनार्थिनः प्रेक्षावतः प्ररोचयन्, ग्रन्थारम्भे वृत्तिकृत् पद्यमेकं समुदाजहार 'नम इति'। यथार्थपक्षग्राहिणी प्रतिभा बुद्धिः, सा स्वतो भक्तवात्सल्येन भक्तानां अनुकम्पनीयत्वेन च † यस्यास्ति

* फणाधरकल्पं (ट)

† भक्तवात्सल्येन, दयत्वेनच, (ङ)

स बुद्धो भगवान्, अर्थ आद्यच्, तस्मै नमः। नमः स्वस्तीत्यादिना (२।३।१६) चतुर्थी। प्रथमत उपदेशादाकाङ्क्षादिमहिम्ना च तं नमस्कृत्येत्यायाति। स देवदेवो यथा सर्व्वज्ञस्तथा तच्चरणानुग्रहादहमपि प्रकृते कर्म्मणि सर्व्वज्ञो भवानीति हृदयम्। वैदिकप्रयोगानर्थिनो लक्ष्मणसेनस्य राज्ञ आज्ञया प्रकृते कर्म्मणि प्रसज्जन् ग्रन्थे लघुतायां हेतुमाह—'भाषाया मिति'। भाषते लोकोऽनया परिपाट्या, "गुरोश्च हलः" (३।३।१०३) इत्यकारे कृते, भाषा लोक-परिपाटी। यद्यपि अपशब्द-प्रक्रिययाऽपि लोको भाषते, तथापि साधुशब्दसाधकशास्त्रारम्भे प्रयोगात् साधुशब्द-भाषायामिति योज्यम्। तथाहि—"आहिताग्निरपशब्दं प्रयुञ्जानः प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्व्वपेत्।" हे अरय इत्यर्थे हेऽरयो हेऽलय इति वदतोऽसुरान् सुराः पराबभूवुः,* "तस्माद् ब्राह्मणेन यज्ञशालां प्रविष्टेन नापभाषितवै न म्लेच्छितवै" इतिश्रुतिः। "मनसा सङ्कल्पयेत्, ततो वाचाऽभिलपेत्, ततोऽनुक्रामेत् क्रियाम्, सा च परिष्कृता-

* हे अरय इत्याद्यर्थकथनमात्रम्। भाष्ये त्वेवं पाठो दृश्यते — "तेऽसुराः। हेलयो हेलय इति कुर्व्वन्तः पराबभूवुः तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः।" व्याख्यायते च कैयटेन — "तत्र केचिदाहुः हेहे-प्रयोगे हैहयोरिति प्राप्ते प्रकृतिभावे च कर्त्तव्ये तदकरणं म्लेच्छनमिति। पदद्विर्व्वचने कार्य्ये वाक्यद्विर्व्वचनं तत्त्वं म्लेच्छनम् इत्यपरे। न म्लेच्छितवा इत्यस्य पर्य्यायो नापभाषितवा इति। कृत्यार्थे इति तवैप्रत्ययः। म्लेच्छ इति [illegible] वा।"

वागभिमताय फलाय" इति श्रुतेश्च याज्ञिकेन संस्कृतैव वागभिलपनीया । संस्कारश्च त्रैलोक्य एव यः प्रमाणभूतो वैदिकेषु लौकिकेषु च शब्देषु सुप्रयोग निपुणः शिवोदेव स्तदनुग्रहीतो वा पाणिन्याऽऽपिशलि-कात्यायन-काशकृत्स्नादीनामन्यतम स्तदभिमतया प्रयोगमर्य्यादया भाषणं भाषा । तथाच — भाषाशब्देन लौकिक-पद-प्रयुक्ति रुक्ता, तस्याश्च विवक्षाविषयत्वं । साधु र्हि दानाध्ययनादिकर्म्मसु प्रवर्त्तमानोऽपशब्दं न भाषेत, शक्तः सदैव संस्कृतं भाषेत ।

यथा बृहस्पतिः —

"नासंस्कृतां वदेद्वाणीं कर्म्म कुर्व्वन्यज्ञियाम् ।
यत्तेऽपशब्दतो जल्पन् प्रायश्चित्तीयते द्विजः ॥
असंस्कृतामपि गिरं भाषितानापदि द्विजः ।
अपभ्रंशाभिधायीत् वर्ज्यः स्याद्व्यकव्ययोः ॥"

इति ।

तच्च संस्कृतवाग्वचनं शब्दानुशासन-ज्ञानादेवेति कारुणिकस्य मुने स्तदर्थं शास्त्रनिर्म्माणेऽपि विवरणज्ञानादेव निःसंशयस्तत्तत्पदप्रयोग इति स्व-परिश्रमस्य प्रयोजनमभिहितम् ।

उक्तञ्च —

"सर्व्वस्यैव हि शास्त्रस्य कर्म्मणोवाऽपि कस्यचित् ।
यावत् प्रयोजनं नोक्तं तावत्तत् केन गृह्यताम् ॥"

इति ।

काले चास्मिन् कनीयसि, सम्प्रमतया वेदानामप्रचाराद्वैदि-केषु लोक स्तथा नार्थी, यथा व्यवहार-सम्पादक-प्रयोगेषु , अतो मद्वृत्तिज्ञानाय यतिष्यते लोक इति भावः । केषां वृत्तिः ? इत्याह — ' यथेति '। "मनेरुच" (५७२ उ०) इति मन्यते रि-प्रत्ययोऽकारस्योपधाया उत्वश्चेति । मननात् तत्वज्ञानान्मुनिः ; त्रयाणां मुनीनां समाहारः त्रिमुनि; तस्य यानि यानि लक्षणानि तेषां, वीप्साया मव्ययीभावे " अमृत्वपञ्चम्याः " (२ । ४ । ८३) इति षष्ठ्या अम् । पाणिनि-सूत्राणि कात्यायन-वाक्यानि भाष्य-कार-मतानिच भाषोपयुक्तानि, तेषां वृत्तिरित्यर्थः । लघ्वी अल्पा उक्तरीत्या , "त्रिष्विष्टेऽल्पे लघुः" इत्यमरवचनादिष्टा च अन्यत्वा-नर्थित्वादेव । वृत्तिरिति, — " वृतु विवरणे " इत्यस्य दैवादि-कस्य क्तिनि विवरणमित्यर्थः । ये तु दिवादौ वा वृतुधातुं न मन्यन्ते, तेषां "वृतु भाषार्थे " इति चौरादिकस्य वृत्तिपदम् । विधीयते इति विधातुमारभ्यते इत्यर्थः । बुद्धाय नमो विधीयते इति, विधातुमारभ्यते वृत्तिश्चेति काकाक्षिवत् ।

## अथ शब्दानुशासनम् ॥

**लौकिकानां प्रकृतिप्रत्यय-विभाग-परिकल्पनया, सामान्यविशेषवता च लक्षणेन, गत्यन्तराभावात् वर्णाना मुपदेशः क्रमसन्निवेशानुबन्धासञ्जनार्थः। तदुभयं सञ्ज्ञार्थम्। सा च लाघवेन शास्त्रप्रवृत्त्यर्था। अकारस्य विवृतोपदेश आकारग्रहणार्थः॥**

व्याकरणशास्त्रमारभमाणो भगवान् पाणिनिमुनिः प्रयोजन नामनी व्याचिख्यासुः प्रतिजानीते — "अथ शब्दानुशासनम्" इति *। अथशब्दो यद्यप्यारम्भार्थ स्तथापि —

"ॐकार श्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभौ॥"

इति स्मरणात् मङ्गलमपि द्योतयतीति मङ्गलपूर्व्वकमारभ्यते इत्यर्थः। अनुशिष्यन्ते व्युत्पाद्यन्तेऽनेनेति करणे ल्युट्, शब्दानामनुशासनमिति शेष-षष्ठी समासः; शास्त्रस्येदमन्वर्थं नाम। देवतावन्दनादिकं मङ्गल मन्यत् किमिति मुनिना न कृतमिति न देश्यम्, अलिखितस्यापि तस्य सम्भवात्, आविर्भूत-तत्त्वज्ञानस्य मुने र्विघ्नाभावस्य सुविदितत्वाच्च।

* "अथ शब्दानुशासनम्" इति भाष्यकारवचनम्, नैतत् पाणिनिसूत्रम्, आदिम प्रतीकत्वेन महाभाष्ये दृष्टत्वात्। "तथाहि पतञ्जलि भगवतो महाभाष्यकारस्य इदमादिम वाक्यम् — 'अथशब्दानुशासनम्' इति सर्व्वदर्शनसंग्रहे माधवाचार्य्य कृतत्वात्।

वृत्तिकृद्विवृणोति— 'लौकिकानामिति'। लोके भवा लौकिकाः अध्यात्मादिः, यद्यपि शब्द-शब्दः समासे प्रविष्ट स्तथापि केषामिति प्रश्नमुन्नीय व्याख्येयमिदम्। दृश्यते च प्रश्नो यथा — बहुपुत्रेण ममपुत्रो गरीयान् इत्युक्ते स पृच्छति कः स इति *; राज्ञः पुरुषोऽयमित्युक्ते कस्य राज्ञ इति।

"यत्रोत्तरेण युक्ते न प्रश्नस्योन्नयनं भवेत्।
उत्तरं नाम तद्वाक्यस्यालङ्करण मिष्यते"॥
द्वीपि-विद्रावनीं † विद्यां यदा लेभे पति र्मम।
ततः प्रभृति देशेऽस्मिन् भित्तो ‡ द्वीपिभयं कुतः॥

अनेनात्र ग्रामे कोदृग्द्वीपिभयमिति भित्तोः प्रश्न उन्नीयते। एवमिहापि केषामित्युन्नेयम्। प्रयोजनञ्च अपभ्रंशशब्द-निवृत्ति-रित्युक्तमेव। अनुशब्देन नित्या एवामीशब्दा निर्व्विकल्प § प्रवृत्त्यर्थ मन्वाख्यायन्त एव, नत्वपूर्व्वतया उपादीयन्त इति प्रतिपादितं; अन्यथा अगृहीत-श(स)ङ्केततया अर्थसम्पादका न भवेयुः। अभिधानस्याश्रयत्वात् अभिधान-प्रामाण्याद्धि शब्दप्रवृत्तिः, न हि सूत्रमस्तीत्येवं प्रयोगो भवति। तथात्वे पञ्चभुक्तवन्तो-ऽस्येत्यत्रापि बहुव्रीहिः स्यात्, न चैवम्। तस्मात् स्थितमेतत्

* बहुपुत्रेण ममपुत्र गरीयस्त्व मित्युक्ते स पृच्छति कस्य इति (ठ)।
† विद्राविनी (ठ)।
‡ भित्ता द्वीपिभय (ठ)।
§ निपात्र (ठ)।

सिद्धशब्दान्वाख्यानमिदमिति। भर्त्तृहरिणा तु द्वादशप्रकाराः शब्दा निरूपिताः ;—

"यौगिका योगरूढ़ाश्च रूढ़ाः संलक्षिताः स्थिताः ।
नानार्थश्चेति षट्‌शब्दा जात्यादेरभिधायकाः ॥
एत एवोपचारेण प्रयुज्यन्ते परे यदि ।
तदा लाक्षणिकाः षट् स्यु रुभये द्वादश स्मृताः ॥"

योगमूला राजपुरुष पाठकौपगवादयो यौगिकाः । योगि मत्यपि प्रतिनियत विषयाः सप्तपर्ण पङ्कजादयो योगरूढ़ाः ।

येषामवयवयोः प्रकृतिप्रत्यययोरर्थो नानुसन्धीयते गोमण्डिषाश्वादय औणादिका स्ते रूढ़ाः । यथोक्तम् — "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति । अतएव "इदुदुपधस्य चाप्रत्ययस्य" (८ । ३ । ४१) इत्यत्र "निर्दुर्व्वहिराविश्चतुराम्" इत्युक्तं; तेन प्रत्ययान्तत्वं तेषु न स्वीक्रियते इति यावत् । "उणादयो बहुलम्" (३ । ३ । १) इति तेऽपि मुनिना उक्ता एव । ये तु लक्षणया वर्त्तमाना अपि वाचका इव द्विरेफादय स्ते लक्षितरूढ़ाः । द्वौ रेफौ यत्र भ्रमरशब्दे वर्व्वरशब्दे वा स द्विरेफः ; द्विरेफो ध्वनतीत्युक्ते न च शब्दो ध्वनतीति द्विरेफशब्द स्तयो रभिधेयावभिधत्ते, न च पराशरादिकमभिधत्ते इति रूढ़ एव । ये तु औणादिकेतररीत्या साधिताः शब्दाः, प्रायेण त्यक्तावयवार्थाः सदुक्तिमहिम्ना क्वापि तदर्थसन्दर्शिन स्ते * स्थितरूढ़ाः, यथा,

*सन्दर्शिन (?)

कुशलमण्डपादयः । कुत्सितं यथा स्यात् तथा शलति गच्छति, कुपूर्व्वः पचाद्यजन्तः शलधातु रिति; अथवा कुशं लाति आदत्ते वा मण्डं निस्रावं पिवतीति "आतोऽनुपसर्गे कः" (३।२।३) इति क-प्रत्ययान्तावेतौ निपुणशब्दविशेषवाचकौ।

"यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते।
स्वरसंस्कारमात्रार्थी तत्र स्यात् पाणिनिः स्मृतिः॥"

इति।

तथात्वेऽपि साधू एव, अथच "राजान इव स्वकर्म्मकुशला यत्र मुनयः" "यत्रमन्दाग्नय इव सनागरमण्डपाः प्रदेशाः", इति जनपदवर्णने स्वकर्म्म राज्यरक्षनं हवनञ्च, * तत्र कुशलाः, समर्थाः, अथच कुशं लान्ति गृह्णन्ति; एवं सनागरं शुण्ठी-सहितं मण्डं पिवन्ति, नागरै र्व्विदग्धजनैः सहिता मण्ड-पाश्च; इत्यर्थद्वयवति काव्ये अवयवार्थमपि स्पृशतः। नानार्था – जीमूतादयः। यद्यपि एते उक्तेषु पञ्चस्वेव प्रविशन्ति, तथापि शब्दस्वरूपमेव प्रवृत्तिनिमित्तमाश्रित्य बहून् अर्थान् प्रतिपादयन्तीति विशिष्योक्ताः। एवं राजपुरुषसदृशो राजपुरुष इत्यनया रीत्याऽऽह – 'एत एवेति'। एते शब्दा उपचारेण गौण्या लक्षणया वा यद्यन्यत्र प्रयुज्यन्ते, तदा लाक्षणिकाश्चेति जाति-गुणक्रियाद्रव्याणां वाचका लक्षकाश्च भवन्त्येः। एधत इत्या-दयोऽपि क्रियाशब्दा यौगिकाः, प्रतिश्रित इत्यादौ लक्षित-

---

* हवनञ्च (ट)

रूप इति सकलसंग्रहः। जात्यादयश्चेति यथावसरं वक्ष्यन्ते। यद्यपि शब्दा उच्चरितप्रध्वंसिन स्तथापि "स्फुटत्यर्थो यस्मादिति स्फोटाख्येन संस्कारात्प्रतीतेनार्थप्रतीतिः" इति भाष्यम्।

"एकैकवर्णासामर्थ्यान्मेलकानुपपत्तितः।
एकस्मृते र्नदीदीन-सामर्थ्यात् स्फोट इष्यते॥
नादै राहितबीजाया मन्त्येन ध्वनिना सह।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्य्यते॥"

ध्वनिश्च त्रिधा। यथा —

"शब्दार्थोभयशक्त्युत्थ स्त्रिधा संकथितो ध्वनिः।"

पूर्व्वपूर्व्ववर्णानुभवजनित-संस्कारसहित-चरमवर्णाश्रयः स्फोटाख्यः शक्तिविशेषोऽयमिति, शब्दब्रह्मेत्याहुराचार्य्याः। स एवार्थप्रत्यायक इति स्थितम्। प्रत्यक्षश्च लोक-व्यवहारः शोका-नन्दादि रेवात्र प्रमाणम्। अथ यदि पौर्व्वापर्य्येण प्रयुक्ता एव शब्दा अनुशिष्यन्ते इत्यलं विभ्रमेण, तेषां तथैव सत्त्वात्।

अथ बार्हस्पत्यानां औशनसानाञ्च शब्दानां स्वरूपं मनुष्यैः कुतो ज्ञायते*? पृथिव्यामेव वा दवीयो-द्वीपदेशवासिभिः† प्रयुक्तशब्दाः कथमितरद्वीपवासिभि र्ज्ञायेरन्? तस्मादस्मदुक्त

* 'ज्ञायेत' (ठ)

† अन्यद्वीपदेशवासिभिः। (ट)

शब्देषु परिश्रम्य सर्व्वशब्दानां स्वरूपं यथा सकलैरेव ज्ञायते, तदर्थोऽयमारम्भ इति चेत् — उचितमेव दीर्घायुषां कालप्रभूतत्वेन अल्पायुषान्तु तादृशे महति शब्दार्णवे दुःशकपारबुद्ध्या जिहासैव न स्यादित्युद्देग माशङ्क्य सुशकां प्रणालीं मुनिरुपदिशति — 'प्रकृतीति'। प्रथमं क्रियते उच्चार्य्यते इति प्रकृति र्धात्वादिः। प्रतीयन्ते विधीयन्ते प्रत्ययाः — तिङ्-सुप्-कृत्तद्धित-विकार-विकरणागमाः। तेषां स्वतोऽविभक्तानामपि विभागस्य परिकल्पनया प्रकृतीनामानन्त्येऽपि प्रत्ययादीनां परिच्छिन्नत्वात् तास्वपि परिच्छिन्नत्वं सम्भाव्यत इतिभावः। 'परि-कल्पनया' इत्यनेन कल्पनामात्रं, नतु परमार्थत, इति सूचितम्। ननु केऽप्यात्मनेपदिनः केऽपि परस्मैपदिनः केचिदुभयपदिन इति प्रत्येकं तानुच्चार्य्य प्रत्ययविधाने सर्व्वस्वरूपग्रहणे मानुषाणां तथैव समुपेक्षा स्यादित्याह — 'सामान्येति'। धातुत्वं सामान्यं, अनुदात्तेत्व-स्वरितेत्वादयो विशेषाः। तथा च प्रातिपदिकत्वं सामान्यम्, गर्गादि नड़ाद्यादयो विशेषाः। तद्यथा — तदता लक्षणेन बहुलतम मपि प्रत्ययं* सुसंक्षिप्तमिव वक्ष्यते इत्यर्थः। लक्षणन्त्वसाधारणधर्म्मवचनम्, यथा — गोः सास्नादिमत्त्वम्। वृत्तिकारोऽपिसंग्रह सूत्र स्वत एव सुस्फुटमिति मत्वा मुनिहृदयमपि प्रकाशयन्नाह — 'गत्यन्तराभावा' दिति।

"ज्ञानोपायविशेषेषु स्त्री गतिर्गमनेऽपि च।"

---

* प्रांशं (ठ)

इति स्मरणाद्गतिरुपायः । अन्तरशब्दोऽन्यार्थः, यद्यपि विशेषणं तथापि राजदन्तादित्वादस्य परनिपातः । प्रकृतेऽभिमतस्योपायान्तरस्यासम्भवात् । अभावस्य विरोधित्वेऽपि पराश्रितत्वाद्गुणत्वे "विभाषागुणे" (२ । ३ । २५) इति पञ्चमी । अभावो हि स्वसम्बन्धमाश्रयति, न तु ज्ञापकाद्धेतोरेव सेति नियमः, "पुंयोगादाख्यायाम्" (४ । १ । ४८) इति निर्द्देशात् । सुबन्तानि तिङन्तानि च पदान्यर्थसम्पर्कीणि च, न च "अइउण्" इत्यादीनि "वृद्धिरादैच्" (१ । १ । १) इति वदन्वयवन्ति । अथ प्रयोगार्हा वर्णाः सुखप्रतिपत्त्यर्थ मुदाह्रियन्त इति चेत् तदपि न, दीर्घानुस्वार विसर्ज्जनीय-जिह्वामूलीयादीना मप्रयोगात् । कादयोमावसानाः स्पर्शा इति स्थितौ, तेषां पञ्चानां वर्गाणा मतिविप्रकीर्णत्वात्, केषामपि वर्णानां द्वि * रिह दर्शनात्, मुनिसूत्रस्य सार्थ कतया, अवश्यमेषां चतुर्द्दशानां सूत्राणां कोऽप्यस्त्यर्थ इति विमृश्य सिद्धान्त माह — 'वर्णानामित्यादि'। वर्णा अकारादय स्तेषा मान्यमुच्चारण मुपदेशः, क्रमेण सन्निवेशो वर्णानां कार्य्यविशेषार्थ मुपादानम्, अनुबन्धानसञ्जनञ्चार्थो यस्य स उपदेश स्तथा इति प्रकृते योजयति । तदुभयमिति — तयोरुभयं तदुभयं, उभाववयवौ यस्य द्वन्द्वस्य, तच्च क्रमसन्निवेशानुबन्धस्वरूपं प्रत्याहारसंज्ञार्थम् । सति ह्येतस्मिन् "आदिरन्त्येनसहेता" (१ । १ । ७१) इत्येतत् प्रवर्त्तते । तत्प्रवृत्तौ चाऽकारादीनाम् "अण्" इत्येवमा-

---

* द्विस्त्रि । (१)

दिकाः संज्ञाः सिध्यन्तीति । 'साचे' ति — संज्ञा लघु इति संप्रज्ञो यथा स्यात् इति कृत्वा तथा चाऽऽख्यातादिसंज्ञार्थ मेतानि सूत्राणि । सूत्रञ्च —

" स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं शास्त्रविदो विदुः ॥ " *
इति

स्तोभा निरर्थका स्तद्धीनं सूत्रम् ।

" पदच्छेदः पदार्थोक्ति र्विग्रहोवाक्ययोजना ।
पूर्व्वपक्षः समाधानं व्याख्यानं पञ्चलक्षणम् ॥ " †
इति

तत्र तत्रावधेयम् । अनिष्टतर्कः पूर्व्वपक्षः, समाधानं सिद्धान्तः प्रामाणिकत्वेनाभ्युपगमार्थ इति यावत् । विभक्तयो न कृता न च संहिताकार्य्याणि, स्वरूपभङ्गभयात् । प्रयोगस्यवर्णानुकरण-रूपाणामेषां कार्य्यार्थमुपात्तानां भेदाभावार्थत्वमिति वा न प्राति-पदिकत्वम् ।

* ' स्वल्पाक्षरमसन्दिग्ध सारवद्गूढ़निर्णयम् ।
निर्द्दोष हेतुमत्यर्थं सूत्रमित्युच्यते बुधैः ॥ ' (ट)

† ' पदच्छेदः पदार्थोक्ति र्विग्रहो वाक्ययोजना ।
पूर्व्वपक्ष-समाधानं व्याख्यान पञ्चलक्षणम् ॥ ' (ठ)

" येनाक्षर समाम्नाय मधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ "

इति कात्यायन-वाक्येन सूत्राणां श्रीमहेश्वर-मुखनिःसृतत्वेन वैदिकतया वा सकलं साधुतममेवाभिधत्ते। 'आकार ग्रहणार्थं' इति — कथं, आकारस्य अकारेण सावर्ण्याभावेन दीर्घाप्राप्तिः । विवृतं करण मूष्मणां स्वराणाञ्च तेभ्य ए ओ विवृततरौ, ताभ्यामपि ऐ औ, ताभ्यामप्याकारः, संवृतस्त्वकार इति शिक्षासूत्रप्रणयनात् । अत आह — अकारस्येति । शास्त्रान्ते " अ अ " (८ । ४ । ६८) इति, तस्य चायमर्थः — प्रयोगे अकारः संवृतकरणक एव प्रयोज्यः, केवल माकारेण सावर्ण्यार्थं तत्र तत्र विवृतत्वेनोपदेष्टव्य इति । विवृतेणाप्यकारेण विवृततमस्याप्याकारस्य सावर्ण्यं, विवृतोपदेश-सामर्थ्यात्, " तुल्यास्यप्रयत्नम् " (१ । १ । ८) इति निर्देशाच्च ।

अ इ उ ण् । ऋ लृ क् । ए ओ ङ् । ऐ औ च् । ह य व र ट् । ल ण् । ञ म ङ ण न म् । झ भ ञ् । घ ढ ध ष् । ज ब ग ड द श् । ख फ छ ठ थ च ट त व् । क प य् । श ष स र् । ह ल् । अकारादीनेतान् वर्णान् क्रमेणोपदिश्यान्ते ण-कारा-

दीनित्संज्ञकाननुबध्नाति प्रत्याहारार्थम् । तत्र ण-कारा-राद्येश्चतुर्द्दशभि रनुबन्धै यथाक्रमं—

" एकं त्रीणि पुनश्चैकं चत्वार्य्येकं त्रयं त्रयं ।
एकं द्वे षट् तथैवैकं चतुःपञ्च षड़ेव च ॥ "

अण् । अक् । इक् । उक् । एङ् । अच् । इच् । एच् । ऐच् । अट् । अण् । इण् । यण् । अम् । यम् । ङम् । यञ् । झष् । भष् । अश् । हश् । वश् । झश् । जश् । पुनर्बश् । छव् । यय् । मय् । झय् । खय् । यर् । झर् । खर् । चर् । शर् । अल् । हल् । वल् । रल् । झल् । शल् । इत्येकचत्वारिंशत् प्रत्याहारा भवन्ति । उरण् रपरः (१ । १ । ५१) चयो द्वितीया (८ । ३ । २८ सिद्धान्तकौमुद्याम् ) ञमन्ता ड्ड (११८ उ०) इत्येते श्चतुश्चत्वारिंशदिति ।

चतुर्द्दशैव सूत्राणि एकेनोपक्रमेणोपन्यस्य सर्व्वेषामेकेनैव प्रकारेण विवरणं कुर्व्वन् आह 'अकारादीनि' त्यादि । सूत्राणां विच्छेदेन पाठात् णकारादीनामन्त्यत्वात् " आदिरन्त्येन सहेता " (१ । १ । ७१) इति सूत्रस्योपस्थाने तानि तानि नामानि भवन्तीत्याह —'अन्त' इति । आदित्वन्तु मध्यमस्यापि परमपेक्ष्य भवतीति काल्पनिकेऽप्यादित्वे इगादिसंज्ञा भवन्त्येव । सर्व्वत्र

णकारादयो हल एव हयवरटादौ तूच्चारणार्थोऽकारः । ननु हल् संज्ञाया अनिष्पत्ते रेषां कथमित् संज्ञा ? इत्याह 'इत्संज्ञका' निति । युक्तिमाह 'प्रत्याहारार्थमिति' अतस्तत् सामर्थ्यादादि-रन्त्येनेति (१ । १ । ७१) सूत्रे नैवोपपत्तौ, सहग्रहणादधिकादित्-संज्ञा क्रियते इति भावः । प्रत्याहारस्य स्वल्पेन प्रबन्धेन बहूना-मुपादानं तदर्थम् । नतु भगजादिसंज्ञा-कार्य्यार्थम् । तथाच दोषो णौ (६ । ४ । ९०) तिङ्सिच्प्रभृतयः प्रयोगाः, क्रिया-विशेषणत्वात् क्लीबत्वम् । यान्युपयुक्तानि तान्येव कारिकया संगृ-ह्णाति 'एकमिति' । नाम्नोविशेष्यत्वात् क्लीबत्वमितिभावः । चतुः सहितानि पञ्च शाकपार्थिवादि (२ । १ । ६० वा०) । ऌकारोप-देशस्य ऌदित्वादङ् (३ । १ । ५५) संक्रम्य इति श्रुतिश्च फलम् । कुमारी ऋतक इति वक्तव्ये ऌतक इत्यस्यापि सामर्थ्यात् कुमार्य्-ऌतक इति ऌकारस्याच्त्वे यणादेशः फलमिति । न तु सावर्ण्यम् । ऋकारऌकारयोः सवर्णसंज्ञेत्यपिसिद्धम् । तथाच पुषाद्यृदित (३ । १ । ५५) इति निर्देशः । नापि यण्विधौ यथासंख्यार्थं आन्त-रतम्यात् सिद्धेः । इत्संज्ञाप्यप्रयोजना अङ्विधानसामर्थ्यात् । हकार-स्याट्सु प्रवेशात् वहिणेति णत्वम् । झलिप्रवेशात् ग्रमेयङ्लुगन्तात् लोट्सिपि ग्रंग्धीति दीर्घानुस्वारौ । शलिप्रवेशात् कस्य दुग्धादेः । आद्यो वकारोऽन्त्यः सानुनासिको निरनुनासिकश्च, दन्त्योष्ठ्योऽ-ल्पप्राणः । अन्यस्तु जशन्तर्वर्ती वर्ग्य ओष्ठ्यः स्पृष्टकरणो महा-प्राण स्तस्यैव भष्भाव स्तेन मृगावित् विष्टभ्वा इत्यतीत्यादौ

न भष् । तथाचापिशलिः । " दन्त्यौष्ठ्यवा हकारस्य वह व्यध-हृभां नभषिति । उद्रूटौ भवतो यत्र यो वः प्रत्ययसन्धिजः अन्तस्थं तं विजानीयाद् वह व्यध हृधामपीति * च " ।

तथा संवत्सर-शब्दोऽनुस्वारवानेव । अन्तस्था द्विप्रभेदा इत्यन्यतमे सानुनासिके वकारे संव्वत्सर इति । सम्बदितं सम्बाद इत्यादिके वदस्थैर्य्ये वद संदेशे इत्याभूस्थस्य वा ओष्ठ्यत्वाम्मकारः परसवर्णः । एवं वास उपसेवाया मिति-चौरादिके । रपर इति ऋकारसावर्ण्ये लृकारस्य ग्रहणे तवल्कार इत्यत्र ल भावार्थं र इति । हयवरट् इत्यस्य रवर्णेन लण् इत्यत्रस्थ-लकारेण अनुनासिकेन इता प्रत्याहार इति जयादित्यस्य वृत्तिकृतो मतम् । चयो द्वितीयाः शरिपौष्करसादे रिति कात्यायनस्य इति मतमेतद्द्वयम् । अन्यदुणादि । एकं त्रीणि इत्यादा वेषां अप्रवेशः । एतासु चतुर्द्दशसूत्रा निबद्धाः परास्तु सुट्सुप्तिङादयः कल्पिताः संज्ञा निर्द्दिश्यन्ते । अयोगवाहानां सामान्येनोपदेश इति शिक्षासूत्रे अवर्णीयमन्यशब्देकदेशः । " जे प्रोष्ठपदाना "(७ । ३ । १८) मित्यत्र ज इतिवत् । वाह प्रयत्ने घञि वाह 'उच्चारणम्' तेन अन्ययोमोच्चार्य्याणा मनुस्वारादीनां सामान्येन हलादिना व्यवहार इत्यर्थः । सव यथा शक्येत विधिःकर्त्तुमिति नातिप्रसङ्गायेति स्थितिः ।

---

* शषो वर्गीय उच्यते (उ) ।

अत्र प्रत्याहारसूत्रेषु हकारादिष्वकार उच्चारणार्थः, हकारो द्विः पठ्यते । अटिशल्यपि च प्रवेशार्थं' तेन अर्हेणाधुक्षदिति । लण् मध्येऽकारः प्रत्याहारार्थः । ते च प्रत्याहारा एकचत्वारिंशत् । "एकैकस्मात् ङ ञ ण रटा द्वाभ्यां ष स्त्रिभ्य एव कणमाः स्युः । ज्ञेयौ चयौ चतुर्भ्यो वः पञ्चभ्यः शलौ षड्भ्यः" इति महाभाष्यम् ।

## वृद्धिरादैच् ॥ १ ॥

## आत् ऐ औ वृद्धिसंज्ञकाः स्युः ।

'वृद्धिरिति' । संज्ञारूपेणार्थवत्त्वमिति प्रातिपदिकत्वे वृद्धि-शब्दात् सुः । स्वरूपमपि हि शब्दार्थएव * । आदिति ऐजिति च पृथगेव पदे । द्वन्द्वे हि इतरेतरयोगे द्विवचनं स्यात् । समाहारे च "द्वन्द्वाच्चुदषहान्तादिति" (५ । ४ । १०६) टच् स्यात् । ऐजिति ज्ञापकं, प्रत्याहारे चकारे न कुत्वमिति, शैलीयमिदं सूत्रकृतः । 'आदिति' तकारो दकारो वा "अदोरविति"(२ । ३ । ५७) वत्-मुखसुखार्थः । ननु तकारोयं "तपरस्तत्कालस्येति" (१ । १ । ७०) सूत्रे "तादपि परस्तपर" इति न्यायेन ऐचो द्विमा-

* यस्मादुच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।
तमाहुरर्थं शब्दस्य नान्यदर्थस्य लक्षणम् । इति स्थितेः । (ट)

त्रिकस्यैव ग्रहणं यथा स्यात् । यथा जायेन्द्री जायीहत मायीहत इत्यादौ चतुर्मात्राविचौ माभूता मित्यर्थः कथं न स्यात् ? नैवं । शिक्षातादपि पर इति पक्षस्य भाषावृत्तिकृता नाभ्युपेतत्वात् । शिक्षासूत्रकृतश्च त्रिषष्टिसंख्यवर्णनिरूपणेन सन्ध्यक्षराणि स्मृतौ द्विमात्राणि प्लुतक्रमेण त्रिमात्राण्यतोऽष्टावेवेति चतुर्म्मात्राविचौ वस्तुत एव न स्तः । प्लुतं विना च न त्रिमाचौ । प्लुतप्रक्रिया च भाषायां नाद्रियत इति *। तकारो मुखसुखार्थ एव । वृद्धिशब्दश्चायं स्त्रीलिङ्ग एव । ये ते इति परसूत्रे विवरणात् । तथा च तत्रिवन्तोऽयं संज्ञिनावनूद्य प्रथममेवाभिधानान्मङ्गलार्थोऽपि ।

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथयन्ति आयुष्मत्पुरुषाणि वीरपुरुषाणि च भवन्तीति" स्थितिः । मध्ये च "शिवशमरिष्टस्य करे तातिलि"† (४ । ४ । १४३) त्यत्र शिवादीनामुपादानम् । शमोऽल्पाच्तरत्वेन (२ । २ । ३४) पूर्व्वनिपाते प्राप्ते शिवशब्दस्य प्रागुपादानञ्च । शेषे च "नोदात्तस्वरितोदयमिति" (८ । ४ । ६७) वैदिकसूत्रे परग्रहणमकृत्वा उदयपदं मङ्गलार्थमेव कृतमिति त्रिमङ्गलमिदं व्याकरणम् । संज्ञासूत्रमिद-

* अन्यथैवं "सामीदनात् पूर्व्वकाले इत्यादि" (२ । १ । ४९) निर्द्देशान्नाभिमता शङ्का वेति किमन्यत्पक्षतया न वृद्धिरिति वा (अधिक पाठ, ट) ।

† [illegible] करे [illegible] सूत्रम् )

मित्यालोच्य "यत्रान्यत् क्रियापदं नास्ति तत्रास्तिर्भवन्ती ‡ परः प्रयोक्तव्य" इति भाष्यस्थितेः एकेनैवोपक्रमेण विवृणोति 'वृद्धिसंज्ञकाः स्युरिति'। वस्तुतस्तु आत् वृद्धिः, ऐ वृद्धिः, औ वृद्धिरित्यर्थः। भवन्तीति वर्त्तमानकालप्रतिपादिका विभक्तिः। अत्राज्ञातज्ञापनं विधिरिति विधौ लिङ् (३।३।१६१) पठति बभूव इत्यादिवत् न प्रत्ययाः।

## अदेङ्गुणः ॥ २ ॥

## अत् एङ् गुणसंज्ञकः स्यात्।

'अदेङ्' ॥ अतस्तकार आकार निवृत्त्यर्थः। न च तस्य वृद्धिसंज्ञा बाधिका, एकासंज्ञाधिकाराभावात्, तरतीति (४।४।५) निर्द्देशात् सिद्धौ, प्रतीति लाघवार्थः। 'अत् एङ् गुणः' स्यादिति एकवचनेन विवरणेन अत्र एङ् चेति समाहारद्वन्द्वः सूचितः *। न चात्र मिलितानां संज्ञा भवति नेतु रित्यादिनिर्द्देशात्। ऋकारस्य गुणे आन्तरतम्याभावादेव त्रयः सर्व्वे गुणाः प्राप्नुवन्ति। तत्र "कार्य्यकाले संज्ञापरिभाषे" इति न्यायात्, गुणविधानकालेसंज्ञासूत्रस्यास्य उरण् रपर" इति (१।१।५१)

‡ भवन्ति इति क्वचित् पाठः।

* पूर्वसूत्रे [illegible] इति समासान्त [illegible] [illegible] [illegible] प्रयोगस्याप्रकपदस्य [illegible] इति पाठान्तरम् (२)

परिभाषायाश्चोपस्थाने ऋकारस्य गुणो भवन् अण् भवति। स च र-परो भवति। अणित्यस्य च पूर्व्वेण णकारेण प्रत्याहारग्रह-णात्। तत्र सन्निविष्टत्वात् रपरोऽकारो गुणो भवतीति भाष्यम्।

## इकोगुणवृद्धी ॥ ३ ॥

अनुक्तस्थाने ये गुणवृद्धी ते इक एव स्थाने वेदि-तव्ये। "सार्व्वधातुकार्द्धधातुकयो" (७। ३। ८४) रित्यङ्गस्य गुणः। चेता, स्तोता। "सिचिवृद्धिः" (७। २। १) अचैषीत्, अलावीत्, अकार्षीत्। कथं द्यौः, सः? गुणवृद्धिशब्देनानभिधानात्।

'इकः'॥ परिभाषासूत्रमिदम्। परि सर्व्वत्र शास्त्रे उपयुक्ता भाषा भणितिः, परिभाषा। सा लिङ्गवती विध्यङ्गशेषभूता च। या लिङ्गद्वारेणैकभागेन उपयुज्यते, सा लिङ्गवती। या च सक-लेनैव* विधिवाक्ये उपयुज्यते, सा परा; सा च काचित् विधेरङ्गभूता, यां विना विधिवाक्यं नैव प्रवर्त्तते, यथा "आदेः परस्येति" (१। १। ५४)। नहि तद्विना "ईदासः" इति (७। २। ८३) प्रवर्त्तते। काचिच्च विधिशेषभूता "विप्रतिषेधे पर-मिति" (१। ४। २) अविरोधे वृत्तेष्वित्यादौ झल्यंत्व (७।

* मात्र मध्येन विधिवाक्ये उपयुज्यते(उ)। सकलैव (ट)।

३ । १०३) मध्याहृतमेव । विरोधविषयेषु वृत्तेभ्य इत्यादिषु इयं परं कार्यं कारयतीति गुणशब्दं वृद्धिशब्दञ्च लिङ्गत्वेनोङ्ग्य इक इति सूत्रैकदेशेनोपयुज्यते इति लिङ्गवती परिभाषा । ननु " आद्गुण " (६ । १ । ८७) इत्यत्र " इकोयणचो "(६ । १ । ७७) त्यतो चीत्यनुवृत्ते " वृद्धिरेचो " त्यत्र (६ । १ । ८८ ) च आदित्यनुवृत्ते स्तत्र विधौ किमनया प्रक्रियया इत्याह— 'अनुक्तस्थान ' इति । नोक्तं स्थानं ययो स्ते तथा । ' इकएवेति ' । यत एवकारकरणं , ततो-ऽन्यत्रावधारण मिति च गुणवृद्धी नियम्येते , इति नियमार्था परिभाषेयं , अन्यथा परसूत्रेण सह एकवाक्यं स्यात् । किमनेन पृथक्कृतेन ? तत्र याति शङ्कते इत्यत्र न गुणः । असतिह्यत्र नियमे आन्तरतम्या दाकारस्य गुणोऽकारः स्यात् । ककारस्य च कण्ठत्वा दान्तरतम्यादकारः स्यादेव । न च " गापोष्टगिति " (३ ।२ । ८ ) टकः कित्वं आतो गुणाभावस्य ज्ञापकं , श्रवणार्थ-त्वस्यापि सम्भाव्यत्वात् । न च ञनेर्ङ (३ । २ । ६७) विधानं ङलो गुणाभावे ज्ञापकं , आन्तरतम्याभावान्नकारस्य अकारः स्यादेवेत्यसम्भवः । ' अङ्गस्यगुण ' इति । इकइत्यनुपस्थाने " येन विधिस्तदन्तस्येति " (१ । १ । ७२) इगन्तस्याङ्गस्येत्यायाति । तदाह , चेतति , तृच् । यत्तु " मिदेर्गुणः " (७ । ३ । ८२) " मृजेर्वृद्धि " (७ । २ । ११४ ) रित्यादा वङ्गमिगन्तं न भवति, तत्राङ्गस्येति इक इति विशेषणीयं , तदुक्तं भाष्ये ' नह्यनिष्टार्था शास्त्रे प्रक्लृप्ति र्युक्तेति ; भवति हि व्याख्यानतो विशेषप्रतिपत्ति

र्नहि सन्देहादलक्षण" मिति परिभाषाभ्यां सर्वत्र व्यवहार इति ।
'मिचिवृद्धि' रिति । 'ह्म्यन्तक्षणत्यत " (१ । २ । ५) मिति चिग्रहणेन ज्ञापित मिदं न मिद्यन्तरङ्गमस्तीति अन्यथा अन्तरङ्गत्वाद्गुणेऽयादेशे च यान्तत्वादेव निषेधः स्यादिति । तथाच गोरिवाचारो दगवोत्, द्योरिवाचारो दयवीदिति चान्तरङ्गत्यावादेशाभावादोकारान्तस्याचारक्विवन्त धातो र्लुङि नित्या वृद्धि र्न भवति, इक इत्यस्य व्यावर्त्यं, * ततो ऽवादेशे कृते "अतोहलादेरिति " (७ । २ । ७) पक्षे वृद्धौ अगवीदगावीदिति द्वयमेव भवति ।
'कथ' मिति । आकार ऐकारस्य वृद्धिसंज्ञकौ । अकार एकारस्य गुणसंज्ञकौ । तथाच अनेन नियमेनानिकां हलां कथमिति इति प्रश्नः । 'गुणवृद्धिशब्देनानभिधानादिति' । प्रकृतत्वात्तयोस्ते इति कर्तव्ये यद्गुणवृद्धी इति वचनं तस्येदमेव फलं, यत्रगुणवृद्धिशब्द मुच्चार्य्य गुणवृद्धौ विधीयेते, तत्रैवापतिष्ठत इति भावः । यद्यपि वृद्धिशब्दो घ्यन्तस्तथापि धर्मादिपाठाद्गुणवृद्धौ इत्यपि । ये तु " तस्य व्याख्यान इति च व्याख्यातव्यनाम्न " (४ । ३ । ६६) इति, "तदर्हति " (४ । ४ । ७६) निर्देशाच्च, याति शङ्कते इत्यत्र व्यावर्त्यमाहुस्ते " पुगन्तेयत ' (७ । ३ । ८६) ख्यापयतीत्याकारस्य गुणो नेति व्यावर्त्यम् इतोक्त इत्यस्यैव फलम् ।

* फाग (?) ।

## न धातुलोप आर्द्धधातुके ॥ ४ ॥

धात्वेकदेशो धातुः । धातुलोपनिमित्ते आर्द्ध-धातुके ये गुणवृद्धी प्राप्नुत स्ते न स्तः । लोलुवः, पोपुवः, मरीमृजः । पचाद्यचि (३ । १ । १३४) यङो लुक् । इक इत्येव. अभाजि, रागः ।

'न धातु' ॥ धातुलोपमपनीय यङ्लुक् इति न कृतं, वैचित्र्यार्थम् । आर्द्धधातुक इत्यपनीय अचीति न कृतं, प्रत्याहाराशङ्का निवृत्तये इत्येके; बोभुवितव्यमित्यर्थ मित्यन्ये । अतिङीति न कृतं लड़ाद्यर्थम् । धातोः सर्व्वावयवस्य लोपाङ्गमेव कार्य्यं नास्ति किं निषेधेनेत्याह 'धात्वेकदेश' इति । लोपपदञ्च कर्म्मघञन्तम् । धातो * र्लोपो यस्मिन् तद्धातुलोप मार्द्धधातुकम् । तदेव च यदि गुणवृद्ध्यो र्निमित्तं, तदा तत्र परे धातो र्गुणवृद्धी न स्तः । तदाह 'पचाद्यचि' 'यङोलुक्' इति । लोलूयादिभ्यः पचाद्यचि (३ । १ । १३४) विहिते "यङोऽचिचेति" (२ । ४ । ७४) "सर्व्वे विधिभ्यो लुग्विधि र्बलवानिति" । अतो लोपमकृत्वा सर्व्वावयवस्य

* धातु (ठ)

यङो लुकि कृते तस्मिन्नेवाच् प्रत्यये आद्ययोर्गुणः परस्य मृजेर्वृद्धिः (७।२।११४) प्राप्नोति। निषेधान्न * भवति।

धातो र्लोपे सतीति न व्याख्यायते। धातुलोपशब्देन यदार्द्ध-धातुकं विशिष्यते, तस्य फलं लोपयतीति। धात्ववयवं पुकमाश्रित्य-लोपो व्यार्व्वलीति (६।१।६६) यलोपेऽपि णिचि गुणो भवत्येव। न ह्यत्र धातुलोपस्य निमित्तं आर्द्धधातुक मिति कृत्वा चेलेक्लोपे रिति (३।४।३३) निर्द्देशादेव सिद्धमितिकृत्वा क्रदन्तादा-ख्यानात्तदाचष्टे इति णिच् कृत्लुगादि यत्र क्रियते तत्र रावणं भेद-यति, सीतां हारयति, इत्यत्र धात्वेकदेशस्य कृतो लोपेऽपि सति णिच्यार्द्धधातुके गुणवृद्धी स्यातामेव, इत्यन्ये वदन्ति। नहि णिचि क्रतोलुक् यौगपद्येन विधानात्। धातुग्रहणं बहु-व्रीहिसंप्रत्ययार्थम्। लोप इत्युक्ते अनुबन्धलोपे लवितेत्यत्रापि न स्यात्, बहुव्रीहौ तु आर्द्धधातुकोत्पत्तेः प्रागेव अकारस्य लोप इति गुणो भवत्येव। आर्द्धधातुक इति किम्? लोलु-यीति।

---

* यङोऽचिचेति मत्वेन धातोरवयवस्य यङो लुकि कृते तस्मिन्नेवाच् प्रत्यये आद्ययोर्गुणः परस्य मृजेर्वृद्धि (७।२।११४) प्राप्नोति। अस्मान्निषेधान्न भवति। न च यङोऽकारस्यातोलोप (६।४।४८) इति लोपे तस्य स्थानिवत्त्वात् ते न स्यातामिति वाच्यम्, "सर्वविधिभ्यो लुग्विधिर्बलीयानिति लोपात् प्रागेव यङ लुको भावात् अवयवानिमित्ते समुदायप्रसिद्धि र्बलीयसीति (१, ३) पाठान्तरम्।

'अभाजीति'। भञ्जेश्च चिणी (६ । ४ । ३३) त्यनुनासिक-लोपः। 'राग' इति। घञि च भावकरणयोरिति (६ । ४ । २७)। इक एव वृद्धिं निषिध्यते, नानिक इति; अत उपधाया (७ । २ । ११६) इति वृद्धिर्भवत्येव ॥

॥ क्ङिति च ॥ ५ ॥

किति ङिति च निमित्ते ये गुणवृद्धी प्राप्नुत स्ते न स्तः। किति। कृतं, स्तुतं *। ङिति। चिनुतः, चिन्वन्ति, मृष्टः †, मृजन्ति, ममृजुः ॥ कथं मार्जन्ति, ममार्जुः?

मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते ॥ *

व्यवस्थितविभाषया नित्यं तुन्दः, परिमृजः ॥

'क्ङिति'। इक इत्येव। कामयते कर्मे णिङ्यपि (३ । १ । ३०) वृद्धिः। निगु-शब्दात् § नड़ादित्वात् फकि (४ । १ । ९९) किति चेति (७ । २ । ११८) वृद्धिः, सामर्थ्यात्। ओर्गुणस्तु कथम्?

* चितं, स्तुतं, भुक्तं, (क, ख,)।

† मृष्टि (क, ख,)।

§ 'निगु' इति मुद्रितकाशिकायां नडादिगणे पाठः।

फक्कः कित्वात् गुणस्य चार्त्तगाश्रयत्वात् । न च इक इत्युभार्थे ये विहिते ते एव न भवतः, इत्यत्र विनिगमक मस्ति । उच्यते, चकारोऽत्र क्रियते अनुवर्त्तमानस्यापीकोऽनुकर्षणार्थ स्तेन इक इति शब्देन इको ये गुणवृद्धी ते एव न स्त इति व्याख्येयम् । पूर्व्वसूत्रा-द्धातुपदमनुवर्त्तते, तेन धातोरेव निषेधोऽनेन नान्यस्येति वा । एवञ्च बभूवेति प्रथम-णलि अचो ञ्णितीति (७।२।११५) वृद्धे र्निषेधोऽपि युक्त एव । क्ङाविती यस्येति प्रत्ययसामान्यापेक्षया एकत्वं;न चात्र यथासंख्यं तदधीते (४।२।५९) तेनदीव्यती (४।४।२) त्यादि निर्द्देशात् । ऋदृशोऽङि गुण (७।४।१६) इत्यत्र तु अङ्येव गुणो नान्यस्मिन्निति नियमार्थमपि स्यादिति न ज्ञापकम् । क्ङितश्च परत्वं तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य (१।१।६६) इति सूत्रबलादायाति । तथा चानन्तर्य एव निषेधात्, चित मित्येवो-दाहरणं युक्तं; न भुक्तमिति । व्यवधानादित्याह' निमित्त 'इति । एतच्च तस्मिन्निति सूत्रे (१।१।६६) निर्द्दिष्टपदं निर्द्दिशता सूत्र-कृतैव स्वीकृतमितिभावः । प्रत्यासत्त्या आतिदेशिकं उदाहरति, चिन्वन्त इति । सार्व्वधातुकमपिदिति (१।२।४) ङित्वात् चिन्वन्तीति हुश्नुवो (६।४।८७) रिति यण्, अशिश्रियदिति परमाश्रित्य न लघूपधगुणः । अन्तरङ्गत्वेन चङि इयङा बाधित-त्वात् । संक्रमे निराकरणे प्रकृतत्वाद्वृद्धेः ग्लाजिस्थश्चेति (३।२।१३९) क्स्नुः, क्निदेव नगित्, तेन जिष्णुरित्यादौ न गुणः । भूष्णुरित्यत्र गुणटौ न भवतः । केवलं स्थास्नुपदे क्निति घुमास्थेति

(६ । ४ । ६६) ईत्वं प्राप्नोति, तदर्थं तत्र इष्टिः स्वयमेव वृत्तिकृता स्वीकरिष्यते इत्यत्र गकारो न व्याख्यातः । भविष्णुरिति तु भुवश्चेति (३ । २ । १३८) सूत्रेण इष्णुचि न निषेधः । निमित्तसप्तमी च, यस्य च भावेन भावलक्षण (२ । ३ । ३७) मिति सूत्रेण । क्ङितोर्हि निमित्तयो र्भावेन गुणवृद्ध्योरप्राप्तिलक्षणभावो लक्ष्यते । निमित्तपदञ्च सूत्रे क्ङितीत्यस्य शेषत्वेन व्याख्येयम्, अतएवोक्तं किति ङिति निमित्ते इति ।

## दीधीवेवीटाम् ॥ ६ ॥

**दीधीवेव्योः छान्दसौ । इटो गुणो न स्यात् । अकणिषं, अरणिषम् । लुङि सिपि लघूपधगुणोऽत्र निषिद्धः ॥**

‘दीधी’ ॥ ह्रस्वश्चतुरिति (८ । ३ । ४३) सुजन्तयोः ह्रस्वयोः साहचर्य्यादेव चतुरिति सुजन्तं ग्राह्यं कृत्वोऽर्थवचनं सहचारितपरिभाषा-व्युदासार्थम् * । तस्य ८ फलमिह आगमस्येटो ग्रहणम् । न त्विट् गतावित्यस्येत्युदाहरति । ‘अकणिष’ मिति । कण रण

* न च व्यञ्जनेऽपि सामान्यग्रहणं भवति इति वाच्यं द्विस्त्रिरिति क्वचित् सहचरितस्य ग्रहणं न भवतीति ज्ञापनीयम् (‘ट’ पाठान्तरम्) ।

वण भण शब्दार्थाः, यस्मात् प्रत्ययविधि (१ । ४ । १३) रित्यत्र तदादिग्रहणात् सिजन्तस्याङ्गत्वे गुणप्राप्ति माह, 'लुङि मपीति'। ननु लुङो ङित्वादेव पूर्व्वेण निषेधः स्यादिति न शङ्क्यं, भूसुवो स्तिङीति (७ । ३ । ८८) निषेधेन ज्ञापित मिदमेतत्त्वाश्रयङित्वे न गुणनिषेध इत्येके। अकारत्र मविनव मित्यादौ स्यादेव गुणः। अत्र भाष्यम्। "नेड्वशि (७ । २ । ८) त्यत इड्ग्रहणानुवृत्तौ यदा-र्द्धधातुक स्येड् (७ । २ । ३५) इति इड् ग्रहणं तत् सम्भवतो विकारस्य निवृत्त्यर्थ मिति गुणो न भविष्यतीति। किमिड् ग्रहणेन? तत्कृतं वैचित्र्यादिति। तथात्वेऽपि पठोंषि ब्राह्मण-कुलानीत्यत्र मान्त (६ । ४ । १०) इति दीर्घो न स्यादिति कर्त्तव्य-मेवेड्ग्रहण मिति तु टीका। वस्तुतस्तु इडिति प्रकृते पुनरिड् ग्रहण मिटो बलवत्त्वबोधनार्थमिति। वशित्वेति संप्रसारणात् पूर्व्वमेवे-डागम इति न क्त्वासे (१ । २ । १८) ङिति कित्वनिषेधात् न संप्रसारण मतो दीधीसूत्रे युक्तमेवेड्ग्रहणमिति" ग्रहिज्या (६ । १ । १६) इत्यत्र भाष्य एवोक्तम्॥

हलोऽनन्तराः संयोगः॥ ७॥

संलग्ना हलः संयोग इत्युच्यते। अग्निरिति ग-नौ, स्त्रीति स-त-राः॥

'हलः'॥ बहुवचन मतन्त्रं तेन द्वयोरपि संलग्नयो र्हलोः

संयोगसंज्ञा । संयोगादेरात (८ । २ । ४३) इति प्राप्तौ, न याख्या प्रिति (८ । २ । ५७) ध्यार्ख्यो नेत निषेधात् तदुच्यते 'सूत्रे लिङ्गवचनमतन्त्र' मिति । अत एव 'अग्निरति गगा' मिति । रूपोदाहरणम् कार्य्योदाहरणमग्निल्वम् । अकारस्य संयोगे गुरुत्वा दिगन्ताच्च लघुपूर्व्वात् (५ । १ । १३) इति नाण् । 'अनन्तरा' इति । विजातीयै रव्यवहिता इत्यर्थः इति । बहूना मपि संज्ञेत्याह 'स्त्रीति' । तत सुस्त्रिया भाव सुस्त्रीत्व मिति पूर्व्ववन्नाण् । संलग्ना हल् संयोग इत्येवास्तु, संसर्गोऽपि * हिर स्त्रिष्ठ अ, किं बहुवचनेनातन्त्रेण ? समुदायस्य संज्ञा यथा स्या-दित्यर्थः †। तेन पठन्नित्यत्र नलोपे प्रत्येकं संज्ञायां नलोपोऽपि स्यात् । तथा उपेयिवाननाश्वान् (३ । २ । १०९) इति निर्द्देश क्वसु-सलोपेऽपि वकारस्य श्रवणात् । हल इति किं ? तितउ च्छत्रम् ‡ । अत्र संज्ञायां संयोगान्तलोपः स्यात् ।

## मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

मुखसहितया नासिकया उच्चार्य्यते यो वर्णः सोऽनुनासिक-संज्ञकः स्यात् । अ आ ङ ञ ण न माः ॥

* संलग्नोऽपि (' ट ' पाठान्तरम्) । † स्यादित्यर्थः (' ट ' पाठान्तरम्) ।
‡ अत्र न गुणशङ्का, तनोति र्डउ (७४० उ) रिति विधानात् ।
अन्यथा ... विदध्यात (' ट ' अधिक पाठः)

'मुख'। मुखञ्च नासिका च मुखनासिकं, तेन आ समन्तात् उच्यते यः स वर्णोऽचेति विवक्षायां मुखपद मनर्थक मेव । आदिर्ञि टुडव (१ । ३ । ५) इतिवत् द्वन्द्वपदानां प्रत्येक मन्वयात् । यो मुखेनोच्यते यश्च नासिकयेत्यर्थे वर्णमात्रस्यैव मुखभवत्वात् संज्ञाप्राप्तेः न चाभ्युपगमः । द्वितीयाश्रित (२ । १ । २४) इत्यादौ श्रितात्यस्तापन्नादावनुनासिकस्य क्विझलो रिति (६ । ४ । १५) दीर्घत्वादिप्राप्तेः । न हि सोऽस्ति वर्णो यो मुखसम्बन्धं वागिन्द्रियं विना उच्चरति । तथाहि —

"आत्मा बुद्ध्या समर्थ्यार्थान्नियुङ्क्ते तद्विवक्षया ।
मनस्तद्वह्निमाहन्ति स प्रेरयति मारुतम् ॥
अग्निमारुतसंयोगात् क्षोभाद्वागिन्द्रियस्य च ।
सूक्ष्मा वाग् जायते पूर्व्वं स एव कथितो ध्वनिः ॥
तत्तत्स्थानेष्वथ यदा वायुश्चरति सेन्द्रियः ।
पश्यन्ती वर्णरूपा वाक् तत उत्पत्तिमर्हति ॥
मध्यमा पदरूपार्था(तु) वाक्यरूपातु वैखरी ।
इति वाचा मवस्थाः स्यु र्मुखमध्ये तदिन्द्रियम् ॥
अर्थसंप्रत्ययो वाक्यात् श्रुतादनुमितात्मतात् ।
विशिष्टं खं मुखं राति विखरा सैव वैखरी ॥
अष्टौ स्थानानि वर्णाना मुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठञ्च तालु च ॥"

इति शिक्षास्मरणात् । तथाच, मुखपदमनर्थकं, नच नासि-

कावचन मित्येवाम् ; मुखमध्ये तदिन्द्रिय मितिवचनान्नासिका-मात्रेणोच्चारणस्यासम्भवात् । तस्मात् अयमत्र समासः, इत्याह 'मुख' सहितयेत्यादि । शाक पार्थिवादि (२ । १ । ६० वा० ) । तेन आङपि न कल्पनीयः , सर्व्वत्रार्व्विति भावः । वचन इति कर्म्मणि ल्युट् । अ आ इति, अकाराकारावुच्चारणार्थौ ॥

## तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥

तुल्यमास्यं ताल्वादि स्थानम् । प्रयत्नः स्पृष्टतादि येषां, तेऽन्योन्यं सवर्णसंज्ञकाः स्युः । वर्ग्यो वर्ग्येण सवर्णः । अचः सस्थानाः । अनुस्वारस्य ययि परसवर्णः (८ । ४ । ५८) । शङ्किता , कुण्डिता । अकः सवर्णे दीर्घः (६ । १ । १०१) दण्डाग्रम् ॥

ऋकारऌकारयोः सवर्णसंज्ञा वक्तव्या ॥ * ॥ होतृ ऌकारः होतॄकारः । ऌकारस्य दीर्घो नास्तीति ऋकारः ॥

तुल्य । तुलना तुला, "चिन्ति पूजि" (३ । ३ । १०५) इति चकारादङ् , तामर्हति ; दण्डादित्वात् (५ । १ । ६६) यः । तुल्यः सदृशः । तुल्य आस्ये प्रयत्नो यस्य इति वृत्तिकृता * समास उक्तः । तत्रच "अमूर्द्धमस्तकात् स्वाङ्गादकामे" (६ । ३ ।१२) इति

अनक्त्याप्नोति, इति दृष्ट्वा समासान्तरमाह 'तुल्य' मित्यादि। आस्यन्द्यास्यमस्मादिति, "अन्येष्वपि दृश्यते" (३।२। १०१) इति ड प्रत्यये, आस्यं मुखं, तत्रभवमिति "शरीरावयवाद्यत्" (५।१।६) आस्यं, ताल्वादिस्थानं, "हलो यमां यमि लोपः" (८।४।६४) इति यलोपः। आस्यञ्च प्रयत्नश्च तौ तुल्यौ यस्येति वर्णसामान्यापेक्षया एकवचनम्। 'स्पृष्टतादि' रिति। स्पृष्टता, ईषत् स्पृष्टता, विवृतता, संवृतता, चेति चत्वार आभ्यन्तरा प्रयत्नाः। समानश्च तत् वर्णश्चेति सवर्णः; वर्णशब्दोऽर्द्धर्चादिः (२।४।३१)। संज्ञिनि तुल्यशब्दस्य संज्ञायां समानशब्दस्य "ज्योतिर्जनपद" (६।३।८५) इति वर्णशब्दे समासात्। सदृशार्थतया सादृश्यस्य चोभयनिष्ठत्वादाह— 'अन्यान्य' मिति। क्रियाविशेषणत्वात् कर्म्मत्वं, पुंवत्त्वं स्वभावात्। क्लीवत्वे हि अन्यशब्दद्वारा "अमोऽदड्" (७।१। २५) आदेशः स्यात्। तथाच "इतरेतरपरस्परान्योन्यशब्दाः कर्म्मव्यतीहारिकत्वे पुंवत्तया, निपातनात् साधव" इति वक्ष्यमाणत्वात् क्रियाविशेषणत्वेऽपि पुंलिङ्गत्वं स्वभावात्। यद्यस्य समानं, तत्तस्य समानवर्णमित्यर्थः।* अ कु ह विसर्ज्जनीयाः कण्ठ्याः। इ चु य शास्तालव्याः। ऋ टु र षा मूर्द्धन्याः। लृ तु ल सा दन्त्याः। उ पूपध्मानीया ओष्ठ्याः। अं आं ङ ञ

* काशिकाकारेण।

ङ ण न मा अनुनासिका नासिक्याः। इत्यादिरीत्या ताल्वादि-स्थानम्। कादयो मावसानाः स्पर्शाः। स्पृष्टं करणं स्पर्शानाम्। अन्तःस्था य र ल वाः। ईषत् स्पृष्टकरणम् अन्तःस्थानाम्। ऊष्माणः श ष स हाः। स्वराः सर्वे एवाचः। विवृतं करणम् ऊष्मणां स्वराणां चेति, तेभ्य ए ओ विवृततरौ; ताभ्यामपि ऐ औ; ताभ्यामप्याकारः; संवृतस्त्वकारः। इत्यादिरीत्या प्रयत्ना ज्ञेयाः। तत्र द्वन्द्वपदार्थस्य प्रत्येकमन्वयात् केवलं यत्तुल्यास्यं, यच्च केवलं तुल्यप्रयत्नं, तस्यापि संज्ञा स्यात्तथा च भिन्नस्थानानां तुल्यप्रयत्नानां सवर्णसंज्ञायां सत्यां "झरो झरि सवर्णे" (८। ४। ६५) इति स्पृष्टकरणस्य पकारस्य तादृशि तकारे लोपः स्यात्। भिन्नप्रयत्नानाञ्च तुल्यस्थानानां सवर्णत्वे अकथयीतन इति अकम शब्दावयव सकारात् हलः परस्य धात्ववयव शकारस्य चकारे सवर्णलोपः स्यात्, इति न सम्भाव्यम्। समुदायेन वाक्यपरिसमाप्तिरिति पक्षस्याश्रयणात्।

पूर्वसूत्रवत् आस्यसन्निहितप्रयत्न आस्यप्रयत्न स तुल्यो यस्य तत् वा समसनीयम्। 'वर्ग्यो वर्ग्येणेति'। वर्गे भवो दिगादित्वात् (४। ३। ५४) यत्। अर्थात् वर्ग्यः स्ववर्गस्य सवर्णः। 'सस्थानः' इति। समानं स्थानं येषां करणाधिकरणस्वरूपतया स्थानं प्रयत्नः कण्ठादि च। 'ऌवर्णस्य दीर्घो नास्तीति'। अ इ उ ऋ एकमात्रिक द्विमात्रिक त्रिमात्रिकतया

द्वादश । ऌ एकमात्रिक त्रिमात्रिकतया द्वौ । सन्ध्यक्षराणि च ह्रस्वहीनान्यष्ट । एवं स्वरा द्वाविंशतिः । कादयः पञ्चविंशतिः य र ल व श ष स हा अष्टौ । अनुस्वारानुनासिकः । जिह्वामूलीयोपाध्मानीया यत्वारः अयोगवाहाः । कुं खुं गुं घुं यमाश्चत्वारः । इति त्रिषष्टि-वर्णाः । इति शिक्षाकारोक्त-परिसंख्यया ऌवर्णस्य वर्णत एव दीर्घो नास्तीति ॥ ९ ॥

नाज्झलौ ॥ १० ॥

अच्-हलौ सवर्णसंज्ञकौ न स्तः । दण्ड-हस्तः । दधि-शीतम् । वैपाशो मत्स्यः । आनडुहं चर्म्म । यस्येतिचेति (६ । ४ । १४८) लोपो न भवति ॥

'नाज्झ' । नाचित्य द्विवचनबहुवचने द्वन्द्वो वा अज्झलाविति झयो होऽन्यतरस्याम् (८ । ४ । ६२) इतिपूर्व्वसवर्णतया हकारस्य झकारः । 'दण्डहस्त' इति । अकारहकारयोः-सावर्ण्याभावात् अकः सवर्णे (६ । १ । १०१) इति न दीर्घः एवं 'दधिशीत' मित्यत्रापि इकारशकारयोः । एतदर्थं सूत्रं न कर्त्तव्यम् । अत्रैव दीर्घविधाना दित्याशङ्कोदाहरणान्तरमाह - 'वैपाश' इति ।

" विपाशात् विपाट्स्त्रियाम् । "

इति शकारान्तोऽपि। अचौ परस्परं सवर्णौ न भवत इति तु न वाच्यं, नाजिति अत्रैव दीर्घकरणात्. तथा हलौ परस्परं इति च न वाच्यम्। अज्झलाविति पूर्व्वसवर्ण-झकारादेश-विधानात्। भाकारान्तस्य स्थानिवद्भावादेव लोपस्यापास्तत्वादिति भावः। विपाश् शब्दः। विपाशि नद्यां भव इति अणि। इकार सावर्ण्ये यस्येतिच (६। ४। १४८) इति श्-लोपः स्यात्। एवमनडुहो विकार आनडुह इति, तस्य विकारः (४। ३। ११४) इत्यणि,अकार सावर्ण्ये हकारलोपः स्यात्। सति त्वस्मिन्योगे यत्तत्र अचीत्येव ' कुमारी गेत ' इति प्रत्युदाहरणं कृतं, तत् प्रथमयोः पूर्व्वसवर्णः (६। १। १०२) इति वक्ष्यमाणसूत्रेऽचीत्यनुवर्त्तते इति। कुत्र इत्यत्र न दीर्घ इत्यर्थं गङ्गास्रोतोन्यायेनाचीत्यनुवर्त्तत एवेति प्रकाशयितुम्। तत्र " उपायस्यानुपायतोपालम्भो नतूपात्तेषु नानात्वमिति " न्यायेन। ननु अणुदित् सवर्णस्य (१। १। ६९) इति सवर्णग्राहकं सूत्रं, तत्र " तावदेव स्तम्भ सवतिष्ठते यावत् कस्य कः सवर्ण इति न निर्णय इति "; तत्र प्रत्याहारसूत्रनिविष्टा अचो ह्रस्वा एव; तथा सवर्णसंज्ञासमय एव नाज्झलावित्यस्यापि स्थानात्। ह्रस्वाना मचां हलाञ्च सावर्ण्यं निषिद्धं, दीर्घाणान्तु हलभिः सावर्ण्य मप्रतिषिद्धमस्त्येव। ततो युक्त मचीत्यवेति। नैवम्। नह्यनत् सूत्रकृताऽभिमतम्। तथात्वे हि तुल्यास्यप्रयत्नं

सवर्णम् (१ । १ । ९) अनज्झलित्येकमेव सूत्रं कुर्य्यात् पार्थक्यस्येदं फलम। स्वस्थानप्रयत्नानामचां हलाञ्च पूर्व्वेण सवर्णसंज्ञाविधानात् अणुदित् (१ । १ । ६९) इति सूत्रे च तस्योपस्थानात् दीर्घाणामपि ग्रहणं सिद्धम्। ततो 'नाज्झलाविति' निषेधस्य प्राधान्येन विधानात् ह्रस्वदीर्घाणामचां गन्धमात्रेण हल्भिः सावर्ण्यं निषेध्यत इति व्यवस्थितिः। युक्तञ्चैतदेव। अन्यथा दास्यतीत्यत्राकारस्य इकारेण सावर्ण्यमस्तीति इणः (८ । ३ । ३९) इति षत्वं प्राप्नोति; दाता यातेत्यत्र हाढ़ः (८ । २ । ३१) इति दादेर्धातोर्घ (८ । २ । ३२) इति घत्व ढत्वे स्याताम्। दामीध्वमित्यत्रापि इणः षीध्वमिति (८ । ३ । ७८) ढत्वं स्यात्। भाः कास्यतीत्यत्र इणः ष (८ । ३ । ३९) इति षत्वं स्यात्। दोष्क इत्यत्र षत्वार्थम्। तत्रापि परेण णकारेण प्रत्याहारस्याश्रितत्वात्। एवं नदी नदीभ्यामित्यत्र कृणां पः (८ । २ । ३६) इति ईकारस्य षत्वं स्यात्। एवं नीतं गीतमित्यादौ "शरः खयो द्वे" (८ । ४ । ४७ वा०) इति तकारस्य द्वित्वं स्यादित्यादयो दोषा भवेयुस्तस्मादुक्तमिदं ह्रस्वादवसामान्येण सावर्ण्यं नास्तीति ॥ १० ॥

## ईदूदेद् द्विवचनं प्रगृह्यम् ॥ ११ ॥

ई ऊ एकारान्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। अग्नी अत्र, वायू अत्र, खट्वे इह, पचेते इह।

मणीवादीनां प्रतिषेध इत्येके । इवार्थे व-कारोऽय मित्यन्ये । मणीव, दम्पतीव ॥

'ईदू' ॥ संज्ञात्वादेवो टि घु घादिवत् प्रगृह्यपद संज्ञा यद्दैः पदा न्वे (३ । १ । ११८) गीतिसूत्रे यत्पदग्रहणं तस्य प्रयोजन मिदम् । यत्र प्रगृह्यशब्दः संज्ञा श्रूयते, तत्र तत्सामानाधिकरण्येन पद मुपतिष्ठते, तदेव पदं संज्ञि ईदादिभि र्विशिष्यते । विशेषणेन च तदन्तविधि र्भवतीत्यत आह, 'ई अ एकारान्तमिति'। तपरक रणं स्पष्टार्थम् । द्विवचन मित्यपि द्विवचनान्तमेव, अग्नी इमा विति प्रगृह्यत्वात् प्लुतप्रगृह्या अचीति (६ । १ । १२५) प्रकृति भावाद् दीर्घाभाव । वायू इति न यणादेशः । खट्वे इत्ययादेशो न भवति ईदूतौ च सप्तम्यर्थे (१ । १ । १८) इति स्वर सूत्रे अर्थग्रहणं । गौर्यो मधिश्रितो गौरौ अधिश्रित इत्यत्र लुप्त सप्तमीकपदेऽपि प्रगृह्यसंज्ञार्थ । तदेव ज्ञापकं । ततोऽन्यत्र प्रगृह्य-संज्ञा प्रत्ययलक्षणद्वारा न भवतीति । तेन कुमार्य्योरगारं कुमा र्य्यगारं, वध्वोरगारं वध्वगारं इत्यत्र प्रत्ययलक्षणत्वात् द्विव चनान्तत्वेपि न सं.ा । "इवार्थे वकारोऽय मित्यन्ये" इति । तेषां मणी इवेति स्यादेव, तस्यानिष्टमित्यत्र्यपदेन द्योतित मित्य-तो वक्तव्य एव अयम् । गोदमीव शब्दस्य महावृत्तौ । एत च्चयमेवेति प्राञ्च । "कुम्भा गिरीवावल कन्यकाया" इति पञ्चवृत्तौ प्रयोगा दाकृतिगणोय मिति पञ्जिका । ईदूदेदिति-

किं ? वृक्षावत्र । द्विवचनं किं ? कुमार्य्यत्र । ११

### अदसो मात् ॥ १२

अदसो मकारात् परमीदूदेत् प्रगृह्यं स्यात् । अमू अत्र, अमू आसाते । मादिति किं ? अमुकेऽत्र । अदसः किं ? शम्यत्र ।

'अदस' । "श्रुतमर्थं समुत्सृज्य कल्प्यतेऽर्थः श्रुतेतरः ।
नियमो बहिरङ्गस्तदन्तरङ्गो विधिः श्रुतेः ॥"

इति वररुचिः अतएव विधिनियमसम्भवे विधिरेव ज्यायान्* । इति ह्वावामश्च (१ । २ । १) कापवादोऽगविधि नेत् सोपसर्गादेवेति नियमः । अतो यद्यत्र द्विवचनग्रहणमनुवर्त्तेत तदा नियमः स्यादन्यथा हि विधिरिति मत्वाह 'अदसो मकारात् परमिति' । ईदूदिति मकारोत्तरेदूदन्तं पदमित्यर्थः । मादित्याश्रयादेवासिद्धत्वं नास्ति । एकारस्त्वसम्भवान्न दर्शितः । एदित्यनुवृत्तौ मादित्यपि स्पष्टार्थमेव ।

---

* नियमपक्षे श्रुतस्य त्रितयस्य परिकल्पनया गौरवात् (ट अधिक पाठ)।

[शे ॥ १३ ॥]

शे इतिच्छन्दोभागः।

निपात एकाजनाङ् ॥ १४ ॥

एको योऽच् निपातः सः प्रगृह्यः स्यात्। अ अपकर्षे। उ उत्तिष्ठ। आ एव मन्यसे। अनाङ् किं? आ उष्णं ओष्णं।

"ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः।
एतमातं ङितं विद्या द्वाक्यस्मरणयोरङित्॥"

'निपात एकाजिति'। पूर्व्वकालैकेति (२। १। ४९) तत्पुरुषोऽन्तरङ्गः। बहुव्रीहिस्त्वन्यपदार्थप्रधानतया बहिरङ्ग इति मत्वाह, 'एको योऽजिति'। 'अनाङिति'। आङोऽन्योऽनाङिति तदन्यत्वे समासः। ननु यथा तदन्यत्वे नञ् समास स्तथा तत्सादृश्येऽपि। यथा त्र्यवृविधा वनञ् पूर्व्वे (७। १। ३७) इति नञ् सदृशाश्रय पूर्व्वे इत्यर्थ। ततश्च तस्मादृश्यादेवैकाच् ग्रहीष्यते। तत् किमेकाच्ग्रहणेनेति? सत्यं। द्विमात्रत्वेन मानुबन्धत्वेन वा सादृश्ये दीर्घ ऋआदिष्वेव स्यात्, न स्वरप्रतिरूपके ष्वकारादिषु। तस्मात् सर्व्वकाजर्थ मेकाच्ग्रहणम्। अ इ उ इत्यादय स्वरप्रतिरूपकाः सम्बोधनाद्यर्थाः। न चैकवचनेनैवैकाच् ग्रहीष्यते किमेकग्रहणेनेतिवाच्यं? सर्व्व वचनस्यासम्भवात्,

अतो विशेष्यत्व-बोधनार्थत्वाच्च । निपातस्य परसूत्रवद्विशेष्यत्वेन तदन्तविधौ प्राप्नोतीति न स्यात् । नचैव मोदित्यनर्थक मिति शङ्क्यं, पत्ते तस्य केवलार्थत्वात् । निपातः किं ? अ इ दन्ते एदन्ते, हे विष्णो इत्यर्थः । एकाच् किं प्राप्नोति । ‘मर्य्यादाभिविधा-विति’ । मर्य्यादा (२ । १ । ६० वा), महितोऽभिविधि स्तथा शाकपार्थिवादि. तेनेतरेतरद्वन्द्वेर्ब्बेवनं, अन्यत्र नुग्वा भवति ।

ओत् ॥ १५ ॥

ओदन्तो यो निपातः स प्रगृह्यः स्यात् । अहो अहं । उताहो इति ।

‘ओत्’ । निपातस्य विशेष्यत्व मित्याह, ‘ओदन्त’ इति ।

“अहो अहं नमो मह्यं यदुहृत्य * समध्यया ।
उन्नाम्य नयने दीर्घे माकाङ्क्ष महमोच्चितः । ”

इति जाम्ब.तीविजये जाम्बवतीदर्शनोत्तरं श्रीकृष्णस्योक्ति ॥ १५

सम्बुद्धौ शाकल्यस्येता वनार्षे ॥ १६ ॥

सम्बुद्धा वोदन्तं शाकल्यस्य मतेन प्रगृह्यं स्यात् ,

. नद्.' ल. ग).

इतौ परे। भानो इति। अन्येषां भानविति।
सम्बुद्धौ किं ? गवित्यय माह। अनार्ष इत्येकवृत्ता।
वुपयुक्तम्।

'सम्बुद्धौ'। 'गवित्यय माहेति' प्रत्युदाहरणे अनुकार्य्यानु-करणयो भेदस्या विवक्षितत्वा दसत्यर्थवत्त्वे प्रातिपदिकत्वाभावा देव विभक्त्यभावः। 'एकवृत्ताविति' कारिकावृत्ता वित्यर्थः। एकशब्दस्य मुख्यार्थत्वात्, कारिकायां मुख्यवृत्तौ, छन्दस्यपि तेन व्याख्याना दिति भावः। भागवृत्ते रन्यस्यां वा, सा हि द्वयो विवरणकर्त्रीं।

उञ्॥ १७॥

उञ् इतौ शाकल्यस्य मतेन प्रगृह्यं स्यात्।
उ इति। अन्येषां विति।

ऊं॥ १८॥

उञ् इतौ ऊमित्यादिश्यते। ऊं इति, उ इति।
अन्येषां विति।

'ऊं'। मएशोञ् ऊं भवति। अनुषक्तान आदेशेनाख्येव तत्

किमर्थमादिश्यत इत्याह, 'स एवेत्यादि'। एतदाकारेण परिणमतोऽर्थेऽपि स्यान्यादेशः स्यादित्याह, आदिश्यत इति।

[ ईदूतौ च सप्तम्यर्थे ॥ १९ ॥ ]

ईदूतौ चेति सूत्रं छन्दोभागः। उक्तं प्रगृह्यम्।

दाधा घ्वदाप् ॥ २० ॥

दाञ्-दाण-दो-देङः, धाञ्-धेटौ घुसंज्ञकाः स्युः। प्रणिददाति। प्रणिदधाति। अदाविति किं? दाप्-दैपां माभूत्। दातं धान्यम्। अवदातं वस्त्रम्।

'दाधा'। यद्यपि ङ्दाञ् इत्यनुबन्धकौ दा-देङौ च लाक्षणिक-दारूपौ तथापि गामादाग्रहणेष्वविशेष इति सर्व्वेषामेव दारूपाणां ग्रहणम्। अत आह, 'दाञ्-दाण-दो देङ' इति। तर्हि मीनातिमिनोतिदीङां ल्यपि च (६। १। ५०) इत्यात्वे दीङ अय इत्यपि दा सम्भवति, स कथं नोच्यते? ल्यपि प्रनिदाय उपविषये च प्रनिदातव्य मिति णत्वं स्यात्। उच्यते, नेर्गदेत्यत्र (८। ४। १७) न्यासे घुशब्दस्य घित्वेऽल्पाच्तरत्वे पूर्व्वनिपात मकुर्व्वता सूत्रकृता सूचित मिद मिह कापीच्छा प्रकाश्यत इत्युक्तम्। तेन मा ग्रहणेन माङ् मेङावेव गृह्येते। ननु

मीनाति मिनोतीति (६ । १ । ५०) कृतात्वा विध्यत स्तस्य च-रितां दोऽपि तत्र न ग्राह्यः । दाधाघ्व इति प्रतिपत्तिसौकर्याय वक्तव्ये घ्विति सङ्कोचो विषयसङ्कोचार्थ इति वा । तथापि यत्र यत्र दाधारूपं तत्र तत्र संज्ञाऽस्तु । दो-देङ्-धेट्सु विकारहीनेषु प्रणिद्यति, प्रणिदयते, प्रणिधयतीत्यादौ कथं संज्ञा ? दाधारूपा-भावात् । अयं ईदूतौ चेति (१ । १ । १८) सूत्राच्चकारोऽनुव-र्तते, वृद्धिरादैच् (१ । १ । १) इत्यत आद्ग्रहणस्य, अदेङ् (१ । १ । २) सूत्रादेङ्ग्रहणं, न धातुलोप (१ । १ । ४) इत्यतो धातु ग्रहणम् । अत आदन्त आदन्तस्य प्रकृति रेङन्तस्य सकल एव धातु गृह्यते । तेन दोर्देङपि गृह्यते । अत एवोच्यते "क्वचि-द्विकृतिरपि प्रकृतिं गृह्णाति" अत एवच धेटोपि ग्रहण मित्याह 'धाञ्-धेटौ चेति' । तेन दाश्च धाश्च दाधा इति बहुवचनान्तम्, न त्वेकवचनान्तम् । तत्सामानाधिकरण्येपि घुपद मेकवच-नान्तं क्लीबत्वं सौत्रत्वात् अत आह, 'घुसंज्ञका' इति । प्रणिददाति इति नेर्गदादिना (८ । ४ । १७) प्राग्घौ णत्वम् । अप इत्युक्तं प्रणिदापयतीत्यत्रापि नत्वादिनिषेध अपिदित्येवास्तु । नास्ति पित् प्रत्ययो यस्मादित्यपि सन्देहमिति नाशङ्क्यते । तथा ष्यदाविति दैपो निषेधो नायाति । अदाप्पत्वादिति चेत् । दैपः पकारकरणसामर्थ्यात्, उदीचां माङो व्यतीहारे (३ । ४ । १८) इति ज्ञापकात् सानुबन्धकस्य असंज्ञकत्वमिति । अत आह, 'दाप् दैपाविति' । दा लवने दैप् शोधने, अस्य

स्यात् दोदद्घो (७।४।४६) रिति अच उपसर्गात्त (७।४।४७) इतिच नभवति।

### आद्यन्तवदेकस्मिन्॥ २१॥

असहाये आद्यन्तवत् कार्य्य मतिदिश्यते। वलादेरिट् (७।२।३५) अलाविषुः। अजादावियङुवङौ (६।४।७७)। श्रियौ, भ्रुवौ। अन्तवत्वे अजन्तात् यत्। अध्येयम्।

व्यपदेशिवदेकस्मिन् इति वक्तव्यम्॥

एकाचो द्वे प्रथमस्य (६।१।१) इति बहुव्रीहिं वक्ष्यति। स यथेह जजागार, तथा इयाय, आर। आदेशप्रत्यययो (८।३।५९) रितिषत्वम्। यथेह पक्ष्यति, तथा अपाक्षीदिति।

'आद्य'। आद्यन्तयोरिवेति षष्ठ्यन्ताद्वतिः। षष्ठी सम्बन्ध सामान्य इति। यः परस्य, यः परस्मिन्, यश्च परस्मात् सर्व्व एव गृह्यते। 'असहाय' इति। एकशब्दस्यासहायवचनत्वात् सप्तमी वत्करणादतिदेशविषयतया वलादेरिति वलादेरार्द्ध धातुकस्य (७।२।३५) विधीयमान इट् केवले वल्मात्रे नप्राप्नोतीति

तत्वादिवद्भावः क्रियते । अयं वल् अन्यस्यादि रित्यर्थः । एवं स्त्रिया वित्यत्रापि यस्मिन्विधि स्तदादा वल्ग्रहण (१ । १ । ७२ वा) इति न्यायेन अजादौप्रत्यये विधीयमान इयङ्वङ् केवले ओकारे नस्यात्। अजन्ता दिति धातो रित्यस्य विशेष्यत्वात् अच इति अजन्तात् यत्प्रत्यय इङ्धातो र्न स्यात् । तस्मादयमेवान्यस्यान्त इवेति तदन्तात् यत् सिध्यति । आद्यन्तवदिति विशेषविधानात् सर्व्वाद्यादिसूत्रं न भवतीति तदपनीय सामान्येनातिदेशं करोति । 'व्यपदेशिवदिति'। व्यपदेश स्तादूप्येण कथनम् । स विद्यते यस्य स व्यपदेशी तद्वत् । 'बहुव्रीहिमिति'। दिदरिद्रिषतीत्येके दिदरिद्रासतीतिवा इति वार्तिकस्वरसा दुदाहरण संग्रहेण, व्याख्याच । तत्र जागृ धातु र्व्यपदेशी, स इव इण् धातु र्घट धातुश्च । तथा चाभ्यासप्रकरणे दीर्घ इणः किति (७ । ४ । ६९) अर्त्ति पिपर्त्योश्च (७ । ४ । ७७) इति आदेशप्रत्यययोः (८ । ३ । ५९) इति षष्ठी * प्रत्ययावयवस्य सस्य षत्वमिति प्रसक्ते उदाहरणम् व्यपदेशी स्य-प्रत्यय स्तद्वत् भिजपि ।

## तरप्तमपौ घः ॥ २२ ॥

एतौ घसंज्ञकौ स्यातां । कुमारितरा, गौरितमा ॥

* षष्ठ्या (द)

'तरप्'। एकस्मिन्निति वर्त्तते। "एके मुख्यान्यकेवलाः"
इतिवचनात् स च केवलार्थः। "पर्य्याय विभक्तिविपरिणाम"
इति केवलाविषयं इत्याह, 'एताविति'। न तु तदन्तौ, अन्यत्र तु
"संज्ञाविधौ प्रत्यय ग्रहणपरिभाषया" वक्ष्यमाणेषु तदन्तविधि-
रस्त्येव। सुप्तिङन्त (१।४। १४) मित्यान्तग्रहणस्यफलम्;
अन्यत्र * "संज्ञाविधौ तदन्त विधिर्नास्ती" ति मतेतु सर्व्वनाम-
संज्ञाप्यपि † न स्यात्, तत्रत्वन्तग्रहणस्य फलं वक्ष्यति। 'कुमा-
रितरेति'। द्वयमनयो रतिशयेन कुमारीति द्विवचनेत्यादिना
तरप् (५।३।५७) घरूप (६। ३। ४३) इति ह्रस्वः।
वयसि प्रथमे (४। १। २०) ङीबनयोरिति वदता अजादौ
प्रकर्षप्रत्ययान्तानां पाठो ज्ञापित इति लभ्यते। विधिक्रमेण तम-
मेव पूर्व्वं निर्द्देष्टु मुचित स्तथापि तरपः प्रागुद्दिष्टत्वा त्तदभ्य-
र्हितत्व मन्वीयते स्वातन्त्र्यं चानुमीयते। तेन तस्य स्वार्थिकत्व-
मतोऽल्पाच्तर (२।२।३४) मित्यादि सिध्यति। २२

---

* ननु सुप्तिङन्तं पद मित्यत्रान्तग्रहणात् ज्ञापकादेव तदन्तविधि र्न भविष्यति किं एकग्रहणानुवर्त्तनेनेति. इत्याह अन्यत्रेत्यादि। ('ट' टिप्पनी।)

† ननु अन्यत्र संज्ञाविधौ तदन्तविधिर्नास्तीत्यस्य वाक्यस्याङ्गीकारे किं दूषण मित्याह सर्व्वनामसंज्ञाप्यपीति। ('ठ' टिप्पनी।)

